निव विर्घाटितकनककपाटं प्रकटवातायनेष्वनवरतदह्यमानकृष्णागुरुधूमरेकैरिव पारावतैरधिष्ठितविटङ्केषु प्रासादकुक्षिषु कतिपयाप्तसुहृत्परिवृतो वीणावेणुमुरजमनोहरमवरोधसंगीतकं ददर्श। किं बहुना। यद्यदतिरमणीयमविरुद्धमायत्यां तदात्वे च तत्तदनाक्षिप्तचेताः परिसमाप्तत्वादन्येषां पृथिवीव्यापाराणां सिषेवे, नत्वतिव्यसनितया। प्रमुदितप्रजस्य परिसमाप्तसकलमहीप्रयोजनस्य नरपतेर्विषयोपभोगलीला भूषणम्, इतरस्य तु विडम्बना। प्रजानुरागहेतोरन्तरान्तरा दर्शनं ददौ, सिंहासनं च निमित्तेष्वारुरोह।

५० शुकनासोऽपि महान्तं राज्यभारमनायासेनैव प्रज्ञाबलेन बभार। यथैव राजा कार्याण्यकार्षीत्तद्वदसावपि द्विगुणीकृतप्रजानुरागो राजकार्याणि चक्रे। तमपि चलितचूडामणिमरीचिमञ्जरीजालिभिर्मौलिभिरावर्जितकुसुमशेखरच्युतमधुसीकरसिक्तनृपसभं दूरावनतिप्रेङ्खोलितमणिकुण्डलकोटिसंघट्टिताङ्गदं राजकमाननाम। तस्मिन्नपि चलिते चलितचटुलतुरगबलमुखरखुररवबधिरीकृतभुवनान्तरालाः, बलभरप्रचलवसुधातलदोलायमानगिरयः, गलन्मदान्धगन्धगजदानधारान्धकाराः, संसर्पदतिबहुलधूलिपटलधूसरितसिन्धवः, प्रचलत्पदातिकलकलरवस्फोटितकर्णविवराः, सरभसोद्घुष्यमाणजयशब्दनिर्भराः, प्रोद्धूयमानधवलचामरसहस्रसंछादिताः, पुञ्जितनरेन्द्रवृन्दकनकदण्डातपत्रसंघट्टनष्टदिवसा दश दिशो बभूवुः।

५१ एवं तस्य राज्ञो मन्त्रिविनिवेशितराज्यभारस्य यौवनसुखमनुभवतः कालो जगाम। भूयसा च कालेनान्येषामपि जीवलोकसुखानां प्रायः सर्वेषामन्तं ययौ। एकं तु सुतमुखदर्शनसुखं न लेभे। तथोपभुज्यमानमपि निष्फलपुष्पदर्शनं शरवणमिवान्तःपुरमभूत्। यथा यथा च यौवनमतिचक्राम, तथा तथा विफलमनोरथस्यानपत्यताजन्माववर्धतास्य संतापः।

विषयोपभोगसुखेच्छाभिश्च मनो विजज्ञे। नरपतिसहस्रपरिवृतमप्यसहायमिव, चक्षुष्मन्तमप्यन्धमिव, भुवनालम्बनमपि निरालम्बमिवात्मानममन्यत।

५२ अथ तस्य चन्द्रलेखेव हरजटाकलापस्य, कौस्तुभप्रभेव कैटभारातिवक्षःस्थलस्य, वनमालेव मुसलायुधस्य, वेलेव सागरस्य, मदलेखेव दिग्गजस्य, लतेव पादपस्य, पुष्पोद्गतिरिव सुरभिमासस्य, चन्द्रिकेव चन्द्रमसः, कमलिनीव सरसः, तारापङ्क्तिरिव नभसः, हंसमालेव मानसस्य, चन्दनवनराजिरिव मलयस्य, फणामणिशिखेव शेषस्य, भूषणमभूत्त्रिभुवनविस्मयजननी जननीव वनिताविभ्रमाणां सकलान्तःपुरप्रधानभूता महिषी विलासवती नाम।

५३ एकदा च तदावासगतस्तां चिन्तास्तिमितदृष्टिना शोकमूकेन परिजनेन परिवृताम्, आरादुपस्थितैश्च ध्यानानिमिषलोचनैः कञ्चुकिभिरुपास्यमानाम्, अनतिदूरवर्तिनीभिश्चान्तःपुरवृद्धाभिराश्वास्यमानाम्, अविरलाश्रुपातार्द्रीकृतदुकूलाम्, अनलंकृताम्, वामकरतलविनिहितमुखकमलाम्, असंयतालकाम्, सुनिबिडपर्यङ्किकोपविष्टाम्, रुदतीं ददर्श। कृताभ्युत्थानां च तां तस्यामेव पर्यङ्किकायामुपवेश्य स्वयं चोपविश्याविज्ञातबाष्पकारणो भीतभीत इव करतलेन विगतबाष्पाम्भःकणौ कुर्वन्कपोलौ भूपालस्तामवादीत्——'देवि, किमर्थमन्तर्गतगुरुशोकभारमन्थरमशब्दं रुद्यते। ग्रथ्नन्ति हि मुक्ताफलजालकमिव बाष्पबिन्दुनिकरमेतास्तव पक्ष्मपङ्क्तयः। किमर्थं च कृशोदरि, नालंकृतासि। बालातप इव रक्तारविन्दकोशयोः किमिति न पातितश्चरणयोरयमलक्तकरसः। कुसुमशरसरःकलहंसकौ यस्मात्पादपङ्कजस्पर्शेन नानुगृहीतौ मणिनूपुरौ। किंनिमित्तमयमपगतमेखलाकलापमूको मध्यभागः। किमिति च हरिण इव हरिणलाञ्छने

न लिखितः कृष्णागुरुपत्रभङ्गः पयोधरभारे । केन कारणेन तन्वीयं हर-मुकुटचन्द्रलेखेव गङ्गास्रोतसा न विभूषिता हारेण वरोरु, शिरोधरा । किं वृथा वहसि विलासिनि स्रवदश्रुजललवधौतपत्रलतं कपोलयुगम् । इदं च कोमलाङ्गुलिदलनिकरं रक्तोत्पलमिव करतलं किमिति कर्णपूरतामारोपितम् । इमां च केन हेतुना मानिनि, धारयस्यनुपरचितगोरोचनाबिन्दु-तिलकामसंयमितालकिनीं ललाटरेखाम् । अयं च ते बहुलपक्षप्रदोष इव चन्द्रलेखाविरहितः करोति मे दृष्टिखेदमतिबहुलतिमिरपटलान्धकारः कुसुमरहितः केशपाशः । प्रसीद, निवेदय देवि, दुःखनिमित्तम् । एते हि पल्लवमिव सरागं मे हृदयमाकम्पयन्ति तरलीकृतस्तनांशुकास्तवायताः श्वासमरुतः । कच्चिन्मयापराद्धमन्येन वा केनचिदस्मदनुजीविना परिजनेन । अतिनिपुणमपि चिन्तयन्न पश्यामि खलु स्खलितमप्यात्मनस्त्वद्विषये । त्वदायत्तं हि मे जीवितं राज्यं च । कथ्यतां सुन्दरि, शुचः कारणम्' इत्येवमभिधीयमाना विलासवती यदा न किंचिदपि प्रतिवचः प्रतिपेदे तदा विरुद्धबाष्पहेतुमन्यः परिजनमपृच्छत् ।

५४ अथ तस्यास्ताम्बूलकरङ्कवाहिनी सततप्रत्यासन्ना मकरिका नाम राजानमुवाच— देव, कुतो देवादल्पमपि परिस्खलितम् । अभिमुखे च देवे का शक्तिः परिजनस्यान्यस्य वा कस्यचिदपराद्धुम् । किंतु महाग्रहगृहीतेव विफलराजसमागमास्मीत्ययमस्या देव्याः संतापः । महांश्च कालः संतप्यमानायाः । प्रथममपि स्वामिनी दानवश्रीरिव सततनिन्दितसुरता शयनस्नानभोजनभूषणपरिग्रहादिषु समुचितेष्वपि दिवसव्यापारेषु कथंकथमपि परिजनप्रयत्नादनुवर्तमाना सशोकेवासीत् । देवहृदयपीडापरिजिहीर्षया च न दर्शितवती विकारम् । अद्य तु चतुर्दशीति भगवन्तं महाकालमर्चितुम्

इतो गतश्च तत्र महाभारते वाच्यमाने श्रुतम्—'अपुत्राणां किल न सन्ति लोकाः शुभाः। पुंनाम्नो नरकात्त्रायत इति पुत्रः' इत्येतत् श्रुत्वा भवनमागत्य परिजनेन सशिरःप्रणाममभ्यर्थ्यमानापि नाहारमभिनन्दति, न भूषणपरिग्रहमाचरति, नोत्तरं प्रतिपद्यते। केवलमविरलबाष्पदुर्दिनान्धकारितमुखी रोदिति। एतदाकर्ण्य देवः प्रमाणम्' इत्येतदभिधाय विरराम।

५५ विरतवचनायां तस्यां भूमिपालस्तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निःश्वस्य निजगाद— 'देवि, किमत्र क्रियतां दैवायत्ते वस्तुनि। अलमतिमात्रं रुदितेन। न वयमनुग्राह्याः प्रायो देवतानाम्। आत्मजपरिष्वङ्गामृतास्वादसुखस्य नूनमभाजनमस्माकं हृदयम्। अन्यस्मिञ्जन्मनि न कृतमवदातं कर्म। जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येहजन्मनि। न हि शक्यं दैवमन्यथा कर्तुमभियुक्तेनापि। यावन्मानुष्यके शक्यमुपपादयितुं तावत्सर्वमुपपाद्यताम्। अधिकां कुरु देवि, गुरुषु भक्तिम्। द्विगुणामुपपादय देवतासु पूजाम्। ऋषिजनसपर्यासु दर्शितादरा भव। परं हि दैवतमृषयः यत्नेनाराधिता यथासमीहितफलानां दुर्लभानामपि वराणां दातारो भवन्ति। श्रूयन्ते हि पुरा चण्डकौशिकप्रभावान्मगधेषु बृहद्रथो नाम राजा जनार्दनस्य जेतारमतुलभुजबलमप्रतिरथं जरासन्धं नाम तनयं लेभे। दशरथश्च राजा परिणतवया विभाण्डकमहामुनिसुतस्यर्ष्यशृङ्गस्य प्रसादान्नारायणभुजानिवाप्रतिहतानुदधीनिवाक्षोभ्यानवाप चतुरः पुत्रान्। अन्ये च राजर्षयस्तपोधनानाराध्य पुत्रदर्शनामृतास्वादसुखभाजो बभूवुः। अमोघफला हि महामुनिसेवा भवन्ति। अहमपि खलु देवि, कदा समुपारूढगर्भभरालसामापाण्डुमुखीमासन्नपूर्णचन्द्रोदयामिव पौर्णमासीनिशां देवीं द्रक्ष्यामि। कदा मे तनयजन्ममहोत्सवानन्दनिर्भरो हरिष्यति पूर्णपात्रं

परिजनः। कदा हरिद्रवसनधारिणी सुतसनाथोत्सङ्गा द्यौरिवोदितरविमण्डला मामानन्दयिष्यति देवी। कदा सर्वौषधिपिञ्जरजटिलकेशो निहितरक्षाघृतबिन्दुनि तालुनि विन्यस्तगौरसर्षपोन्मिश्रभूतिलेशो गोरोचनाचित्रकण्ठसूत्रग्रन्थिरुत्तानशयो दशनशून्यस्मिताननः पुत्रको जनयिष्यति मे हृदयाह्लादम्। कदा गोरोचनाकपिलद्युतिरन्तःपुरिकाकरतलपरम्परासंचार्यमाणमूर्तिरशेषजनवन्दितो मङ्गलप्रदीप इव मे शोकान्धकारमुन्मूलयिष्यति चक्षुषोः। कदा च क्षितिरेणुधूसरो मण्डयिष्यति मम हृदयेन दृष्ट्या च सह परिभ्रमन्भवनाङ्गणम्। कदा केसरिकिशोरक इव संजातजानुचङ्क्रमणावस्थः संचरिष्यतीतस्ततः स्फटिकमणिभित्त्यन्तरितान् भवनमृगशावकाञ्जिघृक्षुः। कदान्तःपुरनूपुरनिनादसक्तान्गृहकलहंसकाननुसरन्कक्षान्तरप्रधावितः कनकमेखलाघण्टिकारवानुसारिणीमायासयिष्यति धात्रीम्। कदा कृष्णागुरुपङ्कलिखितमदलेखालंकृतगण्डस्थलकः मुखडिण्डिमध्वनिजनितप्रीतिरूर्ध्वकरविप्रकीर्णचन्दनचूर्णधूलीधूसरः कुञ्चिताङ्गुलिशिखराङ्कुशाकर्षणविधूतशिराः करिष्यति मत्तगजराजलीलाक्रीडाः। कदा मातुश्चरणयुगलरागोपयुक्तशेषेण पिण्डालक्तकरसेन वृद्धकञ्चुकिनां विडम्बयिष्यति मुखानि। कदा कुतूहलचञ्चललोचनो मणिकुट्टिमेष्वधोदत्तदृष्टिरनुसरिष्यति स्खलद्गतिरात्मनः प्रतिबिम्बानि। कदा नरेन्द्रसहस्रप्रसारितभुजयुगलाभिनन्द्यमानागमनो भूषणमणिमयूखाकुलीक्रियमाणलोलदृष्टिरास्थानस्थितस्य मे पुरः सर्पिष्यति समान्तरेषु। इत्येतानि मनोरथशतानि चिन्तयतोऽन्तःसंतप्यमानस्य प्रयान्ति रजन्यः। मामपि दहत्येवायमहर्निशमनल इवानपत्यतासमुद्भवः शोकः। शून्यमिव मे प्रतिभाति जगत्। अफलमिव पश्यामि राज्यम्। अप्रतिविधेये तु विधातरि किं करोमि।

तन्मुच्यतामयं देवि, शोकानुबन्धः । आधीयतां धैर्ये धर्मे च धीः । धर्मपरायणानां हि सदा समीपसंचारिण्यः कल्याणसंपदो भवन्ति' इत्येवमभिधाय सलिलमादाय स्वयं करतलेनाभिनवपल्लवेनेव विकचकमलोपमानमाननमस्याः साश्रुलेखं ममार्ज । पुनःपुनश्च प्रियशतमधुराभिः शोकापनोदनिपुणाभिः धर्मोपदेशगर्भाभिर्वाग्भिराश्वास्य सुचिरं स्थित्वा नरेन्द्रो निर्जगाम ।

५६ निर्गते च तस्मिन्मन्दीभूतशोका विलासवती यथाक्रियमाणाभरण-परिग्रहादिकमुचितं दिवसव्यापारमन्वतिष्ठत् । ततःप्रभृति नुतरां देवताराधनेषु ब्राह्मणपूजासु गुरुजनसपर्यास्वादरवती बभूव । यद्यच्च किंचित्कुतश्चिच्छुश्राव गर्भतृष्णया तत्तत्सर्वं चकार । न महान्तमपि क्लेशमजीगणत् । अनवरतदह्यमानगुग्गुलबहुलधूमान्धकारितेषु चण्डिकागृहेषु धवलाम्बरेण शुचिर्भूत्वोपोषिता हरितकुशोपच्छदेषु मुसलशयनेषु सुष्वाप । पुण्यसलिलपूर्णैर्विविधकुसुमफलोपेतैः क्षीरतरुपल्लवलाञ्छनैः सर्वरत्नगर्भैः शातकुम्भकुम्भैर्गोकुलेषु वृद्धगोपवनितालंकृतमङ्गलानां लक्षणसंपन्नानां गवामधः सस्नौ । प्रतिदिवसमुत्थायोत्थाय सर्वरत्नोपेतानि हैमानि तिलपात्राणि ब्राह्मणेभ्यो ददौ । महानरेन्द्रलिखितमण्डलमध्यवर्तिनी विविधबलिपानानन्दितदिग्देवतानि बहुलचतुर्दशीनिशासु चतुष्पथे स्नपनमङ्गलानि भेजे । सिद्धायतनानि कृतविचित्रदेवतोपयाचितकानि सिषेवे । दर्शितप्रत्ययानि संनिधानमातृकाभवनानि जगाम । प्रसिद्धेषु नागकुलह्रदेषु ममज्ज । अश्वत्थप्रभृतीनुपपादितपूजान्महावनस्पतीन्कृतप्रदक्षिणा ववन्दे । दोलायमानवलयेन पाणियुगलेन स्नाता स्वयमखण्डसिक्थसंपादितं रजतपात्रपरिगृहीतं वायसेभ्यो दध्योदनबलिमदात् । अपरिमितकुसुमधूपविलेपापूपपललपायसबलिलाजकलिताम-हरहरम्बादेवीसपर्यामाततान । स्वयमुपहृतपिण्डपात्रान्भक्तिप्रवणेन मनसा

सिद्धादेशानक्षपणकान्पप्रच्छ । विप्रश्निकादेशवचनानि बहु मेने । निमित्तज्ञानुपचचार । शकुनज्ञानविदामादरमदर्शयत् । अनेकवृद्धपरम्परागतानि रहस्यान्यङ्गीचकार । दर्शनागतान्द्विजजनमात्मजदर्शनोत्सुका वेदश्रुतीरकारयत् । अनवरतवाच्यमानाः पुण्यकथाः शुश्राव । गोरोचनालिखितभूर्जपत्रगर्भान्मन्त्रकरण्डकानुवाह । रक्षाप्रतिसरोपेतान्योषधीसूत्राणि बबन्ध । परिजनोऽपि चास्याः सततमुपश्रुत्यै निर्जगाम । तन्निमित्तानि च जग्राह । शिवाभ्यो मांसबलिपिण्डमनुदिनं निश्युत्ससर्ज । स्वप्नदर्शनाश्चर्याण्याचार्याणामाचचक्षे । चत्वरेषु शिवबलिमुपजहार ।

५७ एवं च गच्छति काले कदाचिद्राजा क्षीणभूयिष्ठायां रजन्यामल्पावशेषपाण्डुतारके जरत्पारावतपक्षधूम्रे नभसि स्वप्ने सितप्रासादशिखरस्थिताया विलासवत्याः करिण्या इव बिसवलयमानने सकलकलापूर्णमण्डलं शशिनं प्रविशन्तमद्राक्षीत् । प्रबुद्धश्चोत्थाय हर्षविकाशस्फीततरेण चक्षुषा धवलीकृतवासभवनस्तस्मिन्नेव क्षणे शुकनासं समाहूय स्वप्नमकथयत् । स तं समुपजातहर्षः प्रत्युवाच— 'देव, संपन्नाः सुचिरादस्माकं प्रजानां च मनोरथाः । कतिपयैरेवाहोभिरसंदेहमनुभवति स्वामी सुतमुखकमलावलोकनसुखम् । अद्य खलु मयापि निशि स्वप्ने धौतवल्कलवाससा शान्तमूर्तिना दिव्याकृतिना द्विजेन विकचचन्द्रकलावदातदलशतमालोलकेसरसहस्रजटालमकरन्दबिन्दुसीकरवर्षि पुण्डरीकमुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम् । आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रपातीनि शुभानि निमित्तानि । किं चान्यदानन्दकारणमतो भविष्यति । अवितथफला हि प्रायो निशावसानसमयदृष्टा भवन्ति स्वप्नाः । सर्वथा न चिरेण मान्धतारमिव धौरेयं सर्वराजर्षीणां भुवनानन्दहेतुमात्मजं जनयिष्यति देवी । शरत्कालकमलिनी-

वाभिनवकमलोद्गमेन गन्धगजमाह्लादयिष्यति देवम् । येनेयं दिग्गजमण्डलेनेवाविच्छिन्नसंताना क्षितिभारधारणोचिता भविष्यति कुलसंततिः स्वामिनः' इत्येवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्याभ्यन्तरमुभाभ्यामपि ताभ्यां स्वप्नाभ्यां विलासवतीमानन्दयांचकार। कतिपयदिवसापगमे च देवताप्रसादात्सरसीमिव प्रतिमाशशी विवेश गर्भो विलासवतीम्। येन नन्दनराजिरिव पारिजातेन मधुसूदनवक्षःस्थलीव कौस्तुभमणिना सुतरामराजत सा। दर्पणश्रीरिव गर्भच्छलेन संक्रान्तमवनिपालप्रतिबिम्बमुवाह। सा शनैः शनैश्च प्रतिदिनमुपचीयमानगर्भा निर्भरपरिपीतसागरसलिलभरमन्थरेव मेघमाला मन्दं मन्दं संचचार। मुहुरनुबद्धजृम्भिकाजिह्मितलोचना सालसं निशश्वास। तथावस्थां तामहरहः स्वयमनेकरसवाञ्छितपानभोजनां प्रावृषमिव श्यामायमानपयोधरमुखीं केतकीमिव गर्भच्छविपाण्डुरामलोक्येङ्गितकुशलः परिजनो विज्ञातवान्।

५८ अथ तस्याः सर्वसेवकवर्गप्रधानभूता, सदा च राजसंनिकर्षप्रगल्भा, सर्वमङ्गलकुशला कुलवर्धना नाम सहचरिका प्रशस्ते दिवसे प्रदोषोत्तरवेलायामभ्यन्तरास्थानमण्डपगतम्, गन्धतैलावसेकज्वलितदीपिकासहस्रपरिवारम्, उडुनिकरमध्यवर्तिनमिव पौर्णमासीशशिनम्, उरगराजफणामणिसहस्रान्तरालस्थितमिव नारायणम्, मूर्धावसिक्तैः प्रधाननरेन्द्रैः परिमितैः परिवृतम्, अनतिदूरावस्थितपरिजनम्, अनन्तरमुत्तुङ्गवेत्रासनोपविष्टेन धौतधवलाम्बरपरिधानेनानुल्बणवेषेण जलनिधिनेवागाधगाम्भीर्येण समुपारूढविश्रम्भनिर्भरास्तास्ताः कथाः शुकनासेन कुर्वाणं भूमिपालमुपसृत्य रहः कर्णमूले विदितं विलासवतीगर्भवृत्तान्तमकार्षीत्।

५९ तेन तु तस्या वचनेनाश्रुतपूर्वेणासंभाव्येनामृतरसेनेव सिक्तसर्वाङ्गस्य

सद्यःप्रस्फुटरोमाञ्चनिकरकण्टकिततनोरानन्दरसेन विह्वलीक्रियमाणस्य स्मितविकसितकपोलस्थलस्य परिपूरितहृदयातिरिक्तहर्षमिव दशनांशुवितानच्छलेन विकिरतो राज्ञः शुकनासमुखे लोलतारकमानन्दजलबिन्दुक्लिन्नपक्ष्ममालं तत्क्षणं पपात चक्षुः। अनालोकितपूर्वं तु हर्षप्रकर्षमभिसमीक्ष्य भूपतेः कुलवर्धनां च स्मितविकसितमुखीमागतां दृष्ट्वा तस्य चार्थस्य सततं मनसि विपरिवर्तमानत्वादविदितवृत्तान्तोऽपि तत्कालोचितमपरमतिमहतो हर्षस्य कारणमपश्यञ्शुकनासः स्वयमुत्प्रेक्ष्य समुत्सर्पितासनः समीपतरमुपसृत्य नातिप्रकटमाबभाषे— 'देव, अस्ति किंचित्तस्मिन्स्वप्नदर्शने सत्यम्। अत्यन्तमुत्फुल्ललोचना हि कुलवर्धना दृश्यते। देवस्यापीदं प्रियवचनश्रवणकुतूहलादिव श्रवणमूलमुपसर्पदुपरचयदिव नीलकुवलयकर्णपूरशोभामानन्दजलपरिप्लुतं तरलतारकं विकसदावेदयति महत्प्रहर्षकारणमीक्षणयुगलम्। उपारूढमहोत्सवश्रवणकुतूहलमुत्सुकोत्सुकं ताम्यति मे मनः। तदावेदयतु देवः किमिदम्' इत्युक्तवति तस्मिन्राजा विहस्याब्रवीत्— 'यदि सत्यमनया यथा कथितं तथा सर्वमवितथं स्वप्नदर्शनम्। अहं तु न श्रद्दधे। कुतोऽस्माकमियती भाग्यसंपत्। अभाजनं हि वयमीदृशानां प्रियवचनश्रवणानाम्। अवितथवादिनीमप्यहं कुलवर्धनामेवंविधानां कल्याणानामसंभावितमात्मानं मन्यमानो विपरीतामिवाद्य पश्यामि। तदुत्तिष्ठ। स्वयमेव गत्वा किमत्र सत्यमिति देवीं पृष्ट्वा ज्ञास्यामि' इत्यभिधाय विसृज्य सकलनरेन्द्रलोकमुन्मुच्य स्वाङ्गेभ्यो भूषणानि कुलवर्धनायै दत्वा तया च दत्तप्रसादानन्तरमवनितलाश्लिष्टललाटरेखया शिरःप्रणामेनाभ्यर्चितः सह शुकनासेनोत्थाय हर्षविशेषनिर्भरेण त्वर्यमाणो मनसा पवनचलितनीलकुवलयदललीलाविडम्बकेन दक्षिणेनाक्ष्णा परिस्फुरतामिनन्द्यमानस्तत्कालसेवासमुचितेन विरलविरलेन

परिजनेनानुगम्यमानः पुरःसंसर्पिणीनामनिललोलस्थूलशिखानां प्रदीपिकाना-
मालोकेन समुत्सार्यमाणकक्षान्तरतिमिरसंहतिरन्तःपुरमयासीत् ।

६० तत्र च मुक्तरक्षासंविधाने, नवसुधानुलेपनधवलिते, प्रज्वलितमङ्ग-
लप्रदीपे, पूर्णकलशाधिष्ठितपक्षके, प्रत्यग्रलिखितमङ्गल्यालेख्योज्ज्वलित-
भित्तिभागमनोहारिणि, उपरचितसितविताने वितानपर्यन्तावबद्धमुक्तागुणे,
मणिप्रदीपप्रहततिमिरे वासभवने भूतिलिखितरत्नाक्तरक्षापरिक्षेपम्,
शयनशिरोभागविन्यस्तधवलनिद्रामङ्गलकलशम्, आबद्धविविधौषधिमूल-
यन्त्रपवित्रम्, अवस्थापितरक्षाशक्तिवलयम्, इतस्ततो विप्रकीर्णगौरसर्षपम्,
अवलम्बितबालयोक्त्रग्रथितलोलपिप्पलपत्रम्, आसक्तहरितारिष्टपल्लवम्,
उत्तुङ्गपादपीठप्रतिष्ठितम्, इन्दुदीधितिधवलप्रच्छदपटम्, अचलराजशिला-
तलविशालम्, गर्भोचितं शयनतलमधिशयानां कनकपात्रपरिगृहीतैरवि-
च्छिन्नविरलावस्थितदधिलवैर्जलतरङ्गतरलश्वेतशालिसिक्थनिकरैरग्रथितकुसुम
सनाथैः पूर्णभाजनैरखण्डितानतमत्स्यपटलैश्च प्रत्यग्रपिशितपिण्डमिश्रैरवि-
च्छिन्नसलिलधारानुगम्यमानमार्गैः पटलकप्रज्वलितैश्च शीतलप्रदीपैर्गोरोचना-
मिश्रगौरसर्षपैश्च सलिलाञ्जलिभिश्चाचारकुशलेनान्तःपुरजरतीजनेन क्रिय-
माणावतरणकमङ्गलाम्, धवलाम्बरविविक्तवेषेण प्रमुदितेन प्रस्तुतमङ्गलप्राशा-
लापेन परिजनेनोपास्यमानाम्, उपारूढगर्भतयान्तर्गतकुलशैलामिव क्षितिम्,
सलिलनिमग्नैरावतामिव मन्दाकिनीम्, गुहागतसिंहामिव गिरिराजमेखलाम्,
जलधरपटलान्तरितदिनकरामिव दिवसश्रियम्, उदयगिरितिरोहितशशि-
मण्डलामिव विभावरीम्, अभ्यर्णब्रह्मकमलविनिर्गमामिव नारायणनाभिम्,
आसन्नागस्त्योदयामिव दक्षिणाशाम्, फेनावृतामृतकलशामिव क्षीरोदवेलाम्,
गोरोचनाचित्रितदशमनुपहतमतिधवलं दुकूलयुगलं वसानां विलासवतीं

ददर्श । ससंभ्रमपरिजनप्रसारितकरतलालम्बनावष्टम्भेन वामजानुविन्यस्तहस्तपल्लवां प्रचलितभूषणमणिरवमुखरमुत्तिष्ठन्तीं विलासवतीम् 'अलमलमत्यादरेण । देवि, नोत्थातव्यम्' इत्यभिधाय सह तया तस्मिन्नेव शयनीये पार्थिवः समुपाविशत् । प्रमृष्टचामीकरचारुपादे धवलोपच्छदे चासन्ने शयनान्तरे शुकनासोऽपि न्यषीदत् ।

६१ अथ तामुपारूढगर्भामालोक्य हर्षभरमन्थरेण मनसा प्रस्तुतपरिहासो राजा 'देवि, शुकनासः पृच्छति यदाह कुलवर्धना किमपि तत्किं तथैव' इत्युवाच । अथात्यक्तस्मितच्छुरितकपोलाधरलोचना लज्जया दशनांशुजालकत्यानेनांशुकेनेव मुखमाच्छादयन्ती विलासवती तत्क्षणमधोमुखी तस्थौ । पुनःपुनश्चानुबध्यमाना 'किं मामतिमात्रं त्रपापरवशां करोषि । नाहं किंचिदपि वेद्मि' इत्यभिदधाना तिर्यग्वलितनारकेण चक्षुषावनतमुखी राजानं सास्यसूयमिवापश्यत् । अपरिस्फुटहासज्योत्स्नाविशदेन मुखशशिना भूभुजां पतिरेनां भूयो बभाषे —'सुतनु, यदि मदीयेन वचसा तव त्रपा विनन्यते तदयमहं स्थितो निभृतम् । अस्य तु किं प्रतिविधास्यसि विघटमानदलकोशविशदचम्पकद्युतेः सवर्णतया परिमलानुमीयमानस्य कुङ्कुमाङ्गरागस्य पाण्डुरतामापद्यमानस्य, अनयोश्च गर्भसंभवामृतावसेकनिर्वाप्यमानशोकानलप्रभवं धूममिव वमतोर्गृहीतनीलोत्पलयोरिव चक्रवाकयोस्तमालपल्लवलाञ्छितमुखयोरिव कनककलशयोः, सकृदिवालिखितकृष्णागुरुपङ्कपत्रलतयोः श्यामायमानचूचुकयोः पयोधरयोः, अस्य च प्रतिदिनमतिगाढतरतामापद्यमानेन काञ्चीकलापेन दूयमानस्य नश्यत्त्रिवलिरेखावलयस्य कृशिमानमुज्झतो मध्यभागस्य ।' इत्येवं ब्रुवाणमवनिपालमन्तर्मुखहासः शुकनासः 'देव, किमायासयसि देवीम् । इयमनया कथयापि लज्जते । त्यज कुल-

वर्धनाकथितवार्तासंबद्धमालापकम्' इत्यब्रवीत्। एवंविधाभिश्च नर्मप्रायाभिः कथाभिः सुचिरं स्थित्वा शुकनासः स्वभवनमयासीत्। नरेन्द्रोऽपि तस्मिन्नेव वासगृहे तया सह तां निशामत्यवाहयत्।

६२ ततः क्रमेण समीहितगर्भदोहदसंपादनप्रमुदिता पूर्णे प्रसवसमये पुण्ये ऽहन्यनवरतगलन्नाडिकाकलितकालकलैर्बहिरागृहीतच्छायैर्गणकैर्गृहीते लग्ने प्रशस्तायां वेलायामिरंमदमिव मेघमाला सकललोकहृदयानन्दकारिणं विलासवती सुतमसूत। तस्मिञ्जाते सरभसमितस्ततः प्रधावितस्य परिजनस्य चरणशतसंक्षोभचलितक्षितितलो भूपालाभिमुखप्रस्रुतास्खलद्गतिशून्यकञ्चुकिसहस्रो जनसंमर्दनिष्पिष्यमाणपतितकुब्जवामनकिरातगणो विस्फार्यमाणान्तःपुरजनाभरणझङ्कारमनोहरः पूर्णपात्राहरणविलुप्यमानवसनभूषणः संक्षोभितनगरो राजकुले दिष्टिवृद्धिसंभ्रमोऽतिमहानभूत्। अनन्तरं च मन्दरमथ्यमानजलधिघोषगम्भीरदुन्दुभिध्वानपुरःसरेण प्रहतमृदुमृदङ्गशङ्खकाहलानकनिवहनिर्भरेण मङ्गलपटहपटुरवसंवर्धितेनानेकजनसहस्रकलकलबहुलेन त्रिभुवनमापूरयतोत्सवकोलाहलेन ससामन्ताः सान्तःपुराः सप्रकृतयः सराजलोकाः सवेश्यायुवतयः सबालवृद्धा ननृतुरागोपालमुन्मत्ता इव हर्षनिर्भराः प्रजाः। प्रतिदिनमवर्धत चन्द्रोदयेनेव जलधिः कलकलमुखरो राजसूनोर्जन्ममहोत्सवः। (सावशेषम्)



श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽ-
लङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने।
आ सर्वत्र गभीरधीरकविताविन्ध्याटवी चातुरी-
सञ्चारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः॥



# BANA AND HIS KADAMBARI

---

१. युक्तं कादम्बरीं श्रुत्वा कवयो मौनमाश्रिताः ।
बाणध्वनावनध्यायो भवतीति स्मृतिर्यतः ॥ —कीर्तिकौमुदी–१५

२. कादम्बरी–रसज्ञानामाहारोऽपि न रोचते ।
कादम्बरी –रसज्ञानामाहारोऽपि न रोचते ॥

३. केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन् ।
किं पुनः क्लृप्तसन्धानपुलिन्ध्र(न्द)कृतसन्निधिः ॥—तिलकमञ्जरी

४. रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत् किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ॥
—विदग्धमुखमण्डनम्

५. वागीश्वरं हन्त भजेऽभिनन्दम्, अर्थेश्वरं वाक्पतिराजमीडे ।
रसेश्वरं स्तौमि च कालिदासं, बाणं तु सर्वेश्वरमानतोऽस्मि ॥
— अवन्तिसुन्दरीकथा

६. हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः ।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥—त्रिलोचनः

७. जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥

८. बाणीपाणिपरामृष्टवीणानिक्वणहारिणीम् ।
भावयन्ति कथं वान्ये भट्टबाणस्य भारतीम् ॥

९. सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः ।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा ॥—राघवपाण्डवीयम्

१०. यस्याः....हृदयवसतिः पञ्चबाणः स बाणः ।
केषां नैषा कथय कविताकामिनी कौतुकाय ॥—जयदेवः

---

Printed at Sri Shakthi Electric Press, Mysore

# Kadambari—English Translation

(Continued from Part I)

**29.** And there came to my mind (this thought)—" Ah, the life of these men is full of folly and their conduct is despised by good men! For, their conception of *dharma* (righteous duty) is in making offerings of human flesh. Their food is wine, meat and such things condemned by the good. Their excercise is hunting. Their sastra is the howling of jackals. Their teachers of good and bad are the owls. Their wisdom is (in) knowing birds. Their acquaintances are dogs. Their kingdom is over the secluded forests. Their festivity is a drinking bout. Their friends are the bows that are their instruments to do cruel deeds. Their assistants are the arrows with poison-smeared tips resembling serpents with poisonous fangs. Their music is such as brings about the destruction of the simple deer. Their wives are others' wives made captive (by them). Their dwelling is along with the cruel-natured tigers. Their worship of gods is with the blood of beasts. Their offerings (made to deities) are with meat. Their livelihood is by stealing. Their ornaments are the serpent-gems and their cosmetics the ichor of elephants. In whichever forest they dwell, they tear it up completely by (pulling out all roots." —While I was still thinking thus, that

Sabara general, desirous of removing his fatigue caused by wandering in the forest, came and under the shade beneath that very silk-cotton tree took away his bow and sat on a seat of tender leaves hurriedly brought (to him) by his servants. One of them, a young Sabara lad, quickly descended (into the lake), and from that lake, whose waters were disturbed with both his hands (to clear the moss etc.), he brought (to the general), in a cup-like lotus-leaf, water which resembled liquified vaidurya (*lapis lazuli*), which looked like a portion of the sky melted by the heat of the rays of the sun at (the time of) world-annihilation, (or) like (the water) that had oozed forth from the moon's orb, (or) like a cluster of pearls liquified, and which had to be known only by touch on account of its clearness, was cool like snow and fragrant because of the pollen of lotus-buds; he (also brought) fresh-plucked lotus-fibres which were clean, as (their) mud was washed off (by him). And that general, having drunk the water, ate those lotus-fibres one after another, just as Rahu swallows the digits of the moon. When his fatigue was removed, he got up and slowly proceeded in another direction he liked, being followed by the whole of that Sabara army which (also) had refreshed itself with water.

30. But an old Sabara amongst them, who had not obtained from that savage host any deer's flesh (for himself) and who was of an extremely horrid appearance like that of a flesh-eating demon, tarried for a while beneath that very tree seeking some flesh.

When the Sabara general was out of sight, that old Sabara desirous of climbing the tree surveyed it long from its root upwards, as though he were drinking up our lives with his eye (glance) which was red like blood-drops and dreadful with the tawny creeper-like eyebrow encircling it; and (as though he were) counting the places of the nests of parrot-families like a falcon covetous of tasting the flesh of birds. That very moment the lives of the parrot-families, frightened at his sight, departed from them, as it were. What, indeed, is there that is difficult for the merciless to do? For, as though by means of a flight of steps, he very easily climbed up that tree without any effort, although it was as high as a number of tala trees, and had cloud-kissing branch-tops; and he took out, one by one, the young ones of the parrots, as though they were fruits, from the hollows and the spaces between the branches of that tree; the strength to fly up had not yet been developed in those birds; some, who were only a few days old and hence red with the colour of the *foetus*, were creating the impression of (being) the blossoms of the Salmali tree; some, as they were with wings just sprouting out, were resembling the tender leaves of the lotus; some were like the *arka* fruit; some, the tips of whose beaks were reddish, were bearing up the beauty of the lotus-buds with tips pink (in colour) owing to the slightly opened folds of leaves; some, under the guise of the continued shaking of their heads, were forbidding him as it were; and (all of them) were

unable to offer (any) resistance and after depriving them of their lives, he threw them down to the ground.

**31.** My father, however, seeing that great and remediless calamity, destructive to life and befallen all of a sudden, got doubly tremulous; he was casting in different directions his look which was with pupils rolling and restless from fear of death, vacant on account of grief, and bedimmed by tears: his palate became quite parched; he was unable to offer any resistance to save himself: (so) having covered me with the folds of his wings that had become loose as their joints had relaxed in terror, considering that to be the only remedy proper at that time, he remained holding me fast to his bosom, (as he was) overcome by love, highly concerned in protecting me and confused as to what was to be done. That wicked fellow on his part, moving gradually from one branch to another, came to the entrance of the hollow and stretched forth his left arm,—which was as fierce as the body of an old black serpent, whose palm was stinking with the smell of raw flesh and marrow of various wild boars, the wrist-region of which was marked with the scars made by drawing the bow-string, and which resembled the staff of the God of Death; most cruel as he was, he dragged out and killed my father who repeatedly gave him many a blow with his beak and wailed. But somehow, he did not notice me as I lay within the folds of (my father's) wings, because, I was

very small and all my limbs had shrunk into a ball out of fear, and (also) because I had yet to live my life. And when he (my father) was dead, he threw him down to the earth, with his neck hanging loose and the head turned downwards. I too, having my neck inserted between his feet clinging close to his lap, fell down along with him. As my good luck was still in store, I found myself fallen on a large heap of dry leaves drawn together by wind; thus my limbs were not broken. And by the time he got down from the top of that tree, I, whose form could not be distinguished clearly because of my colour being the same as that of the fallen leaves, abandoned my dead father, like a heartless fellow, at that time which was even fitting for me to die; being very young, I was (then) ignorant of the sentiment of affection which takes its birth at a late age; I was simply overpowered solely by fear which is born along with one's birth; and tottering along, supporting (myself) as best as I could on my wings which had hardly grown and considering myself as having escaped out of the (open) hollow of the mouth of death, I resorted to the root-region of a very large *Tamala* tree, into which (region) sun's rays had never found entrance, which was very dense and which was (to me) the lap of a second father, as it were. The tree was one whose shoots were used by Sabara women as ear-rings; with its colour, dark as that of Balarama's garment, it was mocking as it were, the (dark) complexion of Vishnu's body; it was clad ·(*pun*—it had leaves fashioned), as it were,

with pure strips of the (dark) water of Yamuna; its twigs were sprinkled over with the ichor of wild elephants; it bore the beauty of the long tresses of the Vindhya forest, the space between its branches was shrouded in darkness even by day.

**32.** By that time, he (the *Sabara*) came down, gathered up all those young parrots scattered on the ground, bound them in an envelope of leaves after tying them together with a rope like creeper, and went away with very hasty steps in that very direction by the same path taken by his General. Meanwhile, a violent thirst which was caused by fright and which tortured all the limbs overpowered me, who had just gained some hope for life, whose heart had dried up with the fresh grief of the father's death, and whose body was in pain on account of the long fall. 'By this much of time that villain must have gone a very long distance'—thus thinking, and raising up my neck a little, having looked in all the directions with my eyes tremulous with fear, I made effort to creep near the water leaving the foot of the tamala tree, imagining, at every step, even when a blade of grass shook, that the same villain had returned.

**33.** As my wings had not (yet fully) grown, I walked with my legs (but) not very firmly; again and again I stumbled on my face; often I supported myself on the edge of one of my wings when I was fall--ing sideways: I was afflicted by a giddiness produced by my creeping along the surface of the ground, for want of practice (in walking); after taking even a single step, I constantly turned my face upwards

and breathed very hard: as I, grey with dust, thus moved on, (these thoughts) came to my mind:— "Truly, even in the most distressing circumstances, the inclinations of all living beings in this world are never regardless of (their) life. There is nothing dearer than life to all creatures in this world. Thus even when my father, of a well-chosen name, is dead, I still live with unimpaired senses. Shame on me who am pitiless, most cruel and ungrateful! Ah, that I am living a life which is painful as the grief of (my) father's death has been (somehow) borne! Even the favours (conferred by him on me) are not paid heed to. My heart is indeed vile. For all that has been altogether forgotten by me,- all that, viz. how I was brought up by my father, who, when my mother died, restrained his bitter grief and, from the day of my birth, paid no heed, out of love for me, even to the great toil of rearing me up by various means, though (he was) far advanced in age. Most wretched is this life, as it even now does not go forth to follow such on obliging father who is going to some (unknown) place! Surely there is no one whom the desire to live does not turn into a villain: for, this thirst for water is troubling me even when I am reduced to this plight. And I consider that this desire to drink water is simply heartlessness in me heedless of grief of my father's death. Still, the shore of the lake is only far off. For,—this cackling of the *Kalahamsas*, imitating the jingling of the anklets of water-nymphs, is still far away; the notes of the cranes are heard indistinctly; and this fragrance of the lotus-beds comes here, (becoming) rare after spreading through the faces of all directions, because of remoteness. And the condition (at this hour)

34. Thus, I remained reflecting in this manner; at that time, there lived a sage of great penance (to his credit), Jabali by name, in a penance grove not far away from that lake; and his son Harita, a young ascetic, who was like Sanatkumara (i.e. Brahma's son), with a mind purified by (the knowledge of) all lores, being followed by some other ascetic-youths of his own age, came, by the same path (as I lay), to go to that very lotus-pond with the intention of bathing. With a form hard to gaze upon on account of excessive brilliance, he appeared a second sun risen up, carved as it were out of the solar orb, (endowed) with limbs fashioned as if from lightning, and the (whole) body anointed externally as though with molten gold; with the yellowish white flashing lustre of his body he was exhibiting (the beauty of) the day with its early sunlight (or) a wood on wild fire; he had a mass of matted hair, red as heated iron, sanctified by (his) ablutions in many holy waters and hanging on his shoulders; with his knotted tuft of hair (on the head), he seemed to be the Fire-god, who, having suppressed his flames, had put on the disguise of an ascetic-boy

with a desire to consume the Khandava forest; he shone with a crystal rosary hanging from his right ear, as if it were the bracelet (empowering him) to command all religious rites, and resembling (in shape) the anklets of the goddesses of the penance-grove; on his broad forehead he was adorned with a three-lined mark made with the holy ashes, as though it were a thrice conformed vow taken to abstain from the enjoyment of all sensual pleasures; in his left hand he carried a crystal gourd with its neck held ever upwards, which thence, resembled a crane about to fly into the sky and was showing, as it were, the path to heaven; his body was covered by a black antelope-skin hanging down from his shoulder-region, as if by a thick screen of smoke of a bluish white colour, coming out again after being swallowed in his thirst for (doing) penance; he looked bright with his sacred thread, which hung down across his left shoulder, which seemed from its extreme lightness to be made of fresh lotus-fibres, and which waved in the wind as if counting the frame work of his fleshless and distinct ribs; he held in his right hand an *Ashadha* staff, the top end of which bore a leafy basket full of flowers gathered from wild creepers for the worship of the deities; he was followed by a deer of the penance-grove, with eyes wandering as they were being atracted by the *Kusa* grass, flowers and creepers, and bearing clay for his bath having dug it up with its own horns, (as) it was quite familiar with him having been reared with handfuls of *nivara* grains; like a branch (of a tree) with its stem covered with soft bark, he had his body covered with fine bark-garments; like a mountain with sloping sides, he was with a girdle;

like Rahu who has often swallowed the moon, he had often tasted the *Soma* juice; like a grove of day-lotuses he had drunk in the rays of the sun (while doing penance); like a tree on the bank of a river, whose fibrous roots are clean being washed constantly by the water, he had his matted hair which was clean on account of (his) constant ablutions in water; he had teeth as white as pieces of the full-blown night-lotus, like a young elephant with tusks of the same kind; like Drona's son Asvatthaman who was accompanied by Kripa, he was full of compassion. like the starry expanse adorned with the constellations Chitra, Mrigasirsa, Krittika, and Aslesa, he looked beautiful as he held (firmly under his arm) a variegated deer-skin; like a summer day in which the long night is cut short, he had divested himself of many faults: like the rainy season in which the spreading of dust is put down, he had put down the prevalence of passion; like Varuna, he had lived in water (while doing penance); like Vishnu who had dispelled the fear due to the demon Naraka, he had removed the fear of hell; like the beginning of the evening in which the stars are yellow on account of the twilight, he had the pupils of his eyes tawny as the glow of twilight; like the early morning time tawny with the early sun-shine, he was as tawny (in complexion) as the morning sun-shine; like the sun's chariot with axle and wheels securely fixed, he had firmly controlled the whole group of the sense organs; like a good king who removes (the possibility of) wars by means of secret Councils and forces, he had his body rendered lean by practising the most secret *mantras*; like the ocean which has rough conches

by his life; and carry him down to the water-side."— Having said thus, he had me taken to the shore of that lake. And going near the water, he placed his staff and gourd on one side; (and) himself taking me up when I had given up all effort on my part, he raised my beak and made me drink a few drops of water with his finger. And when some particles of water were sprinkled on me and I had gained fresh life, he placed me on the wet and cool shade of a fresh leaf of a lotus plant and performed the rite of bathing as befitted him. When his ablutions were over, he purified himself by doing many *Pranayamas* and repeating the holy *aghamarshanas*, offered with up-raised face *Arghya* to the divine Sun with freshly plucked red lotuses (placed) in a cup of lotus-leaves; and then, he rose up. (Then) having put on a clean white birch-garment and (thus) looking like the evening sun-light blended with the moon's light, he cleaned his matted hair by rubbing it with his palms; and being followed by that band of ascetic youths whose matted hair was yet wet on account of their recent bathing, he took me up and slowly walked towards the penance-grove.

**36**. After going over a distance not very great, I beheld a hermitage which was in every direction encircled by woods of densely-grown trees. The woods were with flowers and fruits ever present in them; they were full of *tala*, *tilaka*, *tamala*, *hintala*, and *vakula* trees; there were groves of cocoa-nut palms over-grown with *ela* creepers; the leaves of the *lodhra*, *lavali* and *lavanga* creepers were waving there; clouds of the pollen of

the mango-blossoms there were rising up; the woods were with the *Sahakara* (mango) trees resonant with the hums of swarms of bees; they were noisy with numerous flocks of infatuated cuckoos; they were white with a mass of the pollen of the full-blown *Ketaki* flowers; they were with sylvan deities riding on the swings of *pugi* creepers; and they were always pouring forth very white heaps of wind-shaken flowers, which seemed to be a shower of meteors foreboding the complete destruction of *adharma*. The out-skirts of the hermitage were adorned with the *Dandaka* forest-grounds which were spotted with hundreds of antelopes fearlessly moving about and reddened with blossomed lotus plants: wherein the leaves of creepers had grown again after they had been nibbled by Maricha in the form of the illusory deer; and whose surface was made uneven with pits, the bulbous roots where-of had been dug up with the end of his bow by Rama. Its precincts were filled with sages entering from all sides, carrying the holy fuel-sticks, Kusa grass, flowers and clay and followed by pupils loudly reciting the Vedas. There the sound of filling the vessels with water was being heard by flocks of peacocks with their necks raised up. It seemed to be with a bridge-like flight of steps leading to the road to Heaven, being constructed under the guise of the rows of smoke issued forth upwards by the sacred fires who were pleased with the ceaseless offerings of ghee and (hence) were desirous of taking the sage-folk even in their bodily forms to the world of gods. It was surrounded by oblong tanks lying in its vicinity; which (tanks) had their turbidness (sin) removed by contact with the sage-folk, as it were; which, with the series

of their waves containing a row of the (reflections of the) sun's orb, appeared as if they were being plunged into by the circle of the Seven Sages come there to visit the ascetics, and which, during nights, bore a grove of full-blown night lotuses which looked like a cluster of constellations descended to wait on the sages. The hermitage was being saluted, as it were, by creepers with their tops bent down by the wind. It was being worshipped, as it were, by trees with their ceaselessly dropping blossoms. It was being waited upon, as it were, by plants with the folds of their foliage serving as folded hands. It had the *Syamaka* grains getting dry as they were spread in the court-yards of huts there. It had the fruits of the amalaka (myrabolan), lavali, karkandhu (jujube) kadali (banana),lakucha (bread tree), panasa (jack tree) and tali (palm) trees, collected. It was with the Brahmin boys loudly reciting the Vedas; with flocks of parrots garrulous with the *Vashatkara* sounds which they had learnt by constant hearing; (and) with the *Subrahmanya* invocation eloquently recited by numerous Sarikas. The balls of rice offered during the *Vaisvadeva* rite were being eaten there by wild cocks; (and) the *Nivara* offerings were being eaten by the young *Kalahamsas* belonging to the pools nearby. The ascetic-boys there, were being licked by the leaf-like tongues of the female deer. The holy fuel-sticks, *Kusa* grass and flowers were giving out a simering sound there, being half-burnt during the Fire-oblations. The surfaces of the rocks there, were greasy with the juice of cocoa-nuts broken against the stones. The surface of the ground was pink with the juice of the recently crushed tree-barks. It (the hermitage) had the *Karavira*

meditation was being firmly taken to, mantras accomplished, and yoga practised. Offerings were being made to sylvan deities there, by calling them out. There the girdles of *munja* grass were being prepared, bark-garments were being washed, the holy fire-sticks were being gathered, the hides of the black antelope were being cured, the ***gavedhuka*** corn was being stored, the lotus-seeds were being dried, rosaries were being strung, cane-staves were being laid (together). ascetics were being received respectfully, and gourds were being filled (with water). It had never yet been visited by the Kali age, not acquainted with false-hood, and unheard by (the bodiless) Cupid. Like the lotus born Brahma, it was respected by all the three worlds. Like (Vishnu) the enemy of the asuras, who exhibited the forms of the man-lion and the Great Boar, it showed (within its precincts) the bodily forms of men, lions and wild boars. Like the Sankhya system of philosophy founded by the sage Kapila, it was abounding in brown cows. Like the garden of the city of Madhura where the proud demon Dhenuka was vanquished by Balarama, it contained infatuated she-elephants possessed of great strength. Like (king) Udayana by whom the Vatsa race was delighted it had a herd of rejoicing young calves. Like the sover eignty of the country of the Kimpurushas, in which king Druma was being consecrated by sages holding the water pots, it had its trees watered by ascetics holding the water pots. Like the close of the hot season where the rain fall is near at hand, it had water-falls in its vicinity. Like the cloudy season in which Vishnu sleeps peacefully in the midst of the deep

ocean, it had its lions sleeping at ease in the interiors of its dense woods Like Hanuman by whom the whole set of the bones of Aksha was crushed to powder by means of pelting pieces of rock at him. it had heaps of the kernels of *Akhota* nuts crushed with strokes from stones. Like Arjuna, when ready to destroy the Khandava forest, had taken up the cause of fire, it had fire-rites begun (by the ascetics). Although its grounds were with the smearing of cow-dung (*pun*-though it bore fragrant unguents), still it had the smell of the constantly emitting smoke of the sacrificial offerings. Although occupied by troops of elephants (*pun*-although occupied by the Chandala families), it was holy. Although with hundreds of burning fires (*pun*-with hundreds of comets appearing there), it was free from calamities. Although containing a group of very learned Brahmin-chiefs (*pun*-having the orb of the full moon), it was with the ever-present darkness due to the dense groves of trees. It was most charming (and, like a second Brahma-loka.

37 And in that hermitage, there was darkness in the sacrificial smokes, not in deeds: facial redness in parrots, not in anger; sharpness in blades of Kusha grass, not in dispositions; wavering in plantain, leaves, not in minds; redness of the eye in the cuckoos, no lustful glance towards others' wives; clasping by the neck in the case of the gourds, not in cohabitation; tying of the girdle in (the observance of) vows, but no fettering in envious quarrels; touching of the breasts (udders) in the case of sacrificial cows, but not in the case of lovely women; shedding of feathers (i. e. moulting) in cocks,

(but) no partisanship in learned discussions; walking round and round while circumambulating Fire, (but) no mistaking in (the import of) sastras; talk of the (Eight Divine) Vasus in the course of divine legends, (but) no talk of wealth out of longing (for the same); counting (of beads) in the Rudraksha rosaries, (but) no concern (shown) towards the physical bodies; removal of a sage's hair by initiation for a sacrifice, (but) no loss of the child of a sage by death; love for Rama got by (reading) Ramayana, (but) no passion for women on account of youth; and contortion (of face) with wrinkles through oldage, (but) not with frowns through conceitedness due to wealth. And (in that hermitage) there was the killing of Sakuni (=1. the warrior Sakuni; 2. birds) only in the Mahabharata; the talk of Vayu (=1 delirium; 2. wind-god) only in the (Vayu) purana; the falling of *dvijas* (=1. teeth; 2. Brahmins) only in old-age; the state of being *jada* (=I. dull 2. cool) only in the sandal trees of gardens; the possession of *Bhuti* (=1. wealth, 2. ashes) only in the case of fires; the passion for listening to songs only on the part of the deer; (there was) *Pakshapata* (=1. shedding of feathers; 2. special liking) during dancing only in the case of pea-cocks; *Bhoga* (=I. expanded hood; 2. sensual enjoyment) only in the case of cobras; the desire for *Sriphala* (1. the Bilva fruit; 2. the benefits of wealth) only in monkeys; and (there was) going downwards only in the case of roots (of trees).

**38** And I saw the divine Jabali seated in the shade beneath a red Asoka tree which, adorned the circular central region of that hermitage of the said description,

whose tender leaves were as red as *alakta* paint, whose branches were with deer-skins and water-gourds suspended (from them) by the sage-folk, at the water-basin of which marks of all the five fingers were made with yellow powder by ascetic-maidens, the water in whose basin was being drunk by young deer, from which garments of Kusa fibres were suspended in a line by the ascetic boys, the ground underneath which was marked out with a coating of green cow-dung, which was beautiful with flower-offerings made just then, and which was not very large, but had spread over a large area on account of its circular shape. He (Jabali) was on all sides surrounded by (other) great sages of rigorous penance, just as the earth is by the oceans, or as the Gold-mountain Meru is by the *Kula* mountains, or as a sacrifice is by sacrificial fires, as the day concluding a *Kalpa* is by the suns, or as (even) the (*Kala*) time is by the *Kalpas*. His body was whitened by old age which, like a lady under a vow, was white with ashes; which, shuddering bodily out of fear of a terrible curse (from him), caused the severe curse of tremor in his body; which, like a lady of his love, took him lovingly by his hair; which, like an angry woman frowning, had caused wrinkles on his brows; which, like an intoxicated woman walking unsteadily, had made him (also) walk unsteadily; and which, like an adorned lady showing a *tilaka* mark (on the forehead), had produced moles (on his body. The sage was beantiful with his matted locks of hair which were long and grey by oldage and thus seemed to be banners of *Dharma* hoisted high (by him) after conquering all the ascetic folk by his penance; which seemed to be ropes of merit collected in order to ascend to the

world of gods; and which appeared as the sprouted clusters of flowers of the tree of his merit that had grown to a lofty height. He had a broad fore-head with the three-lined (horizontal) sacred mark made with ash, which (hence) looked like the surface of a rock of the Himalayas with the three streams of the Ganges flowing obliquely accross it. His eyes were over-hung with creeper-like eye-brows which were of the shape of a digit of the moon with its face turned downwards, and which were flabby with the loosely hanging folds of skin (there). His fore-part was whitened by the exceedingly white rays of his teeth, which (rays) issued forth as his cup-like lips were open on account of his constantly repeating the *Mantras*, and looked like the sprouts (of the tree) of Truth, or like the pure functions of the sense organs, or like the streams of the sentiment of compassion; (and hence) he was like Jahnu emitting the clear stream of the Ganges river. He was never without the bees which were attracted by his breath fragrant on account of his continuously exhaling the *Soma* (smell), and which, as they remained dancing close to the region of his mouth, appeared as if they were the syllables of (his) curses in bodily form. He bore a face which, on account of his being exceedingly emaciated, had deeply sunken hollows of the cheeks; of which (face), the chin and the nose were very prominent, the (eye-) pupils were slightly fierce-looking, the long line of hairs of the eye-lashes had become sparse by their dropping off (one by one), the ear-cavities were blocked by the long hairs grown (over them), and the massive beard so long as to reach his

navel. He possessed a body of which, the neck was closely inlaid with the veins of the throat that looked like long-stretched reins for controlling within the horses in the form of senses which are exceedingly restless; of which the frame-work of bones that were apart from one another, was prominent; in which the sacred thread hung accross the shoulder; and which (body, therefore) appeared as if it were the clear stream of the heavenly river (*Mandakini*) with thin ripples of waves produced by the force of the breeze and with floating lotus-fibres. He was revolving a rosary of beads made of pieces of clear crystals, which was like Goddess Saraswati's necklace made of very bright big round pearls, as it lay in the space between his moving fingers; (and therefore) he looked like a second pole-star (*Dhruva*) round which there is the ever-rovolving cycle of stars. He was closely covered with a prominent net-work of veins, (and thus) resembled an aged (*Kalpa*) tree eovered densely with abundant ripe creepers. He was clad in a bright silken birch-garment, which was clean being washed in the water of the *Manasa* lake which appeared as if made of moon-beams, (or) of nectar-foams, (or) of the threads of his perpetual virtues, and which seemed to be a second cloak of oldage. With the crystal gourd lying near-by, which was filled with the water of the Mandakini river and placed on a tripod, he appeared beautiful like a heap of full blown lotuses with a royal swan by its side. He seemed to be sharing, as it were, his firmness with the mountains, his profoundness with the oceans, his lustre with the sun, his mildness with the moon (of snowy rays), and his purity with the

